५ वर्षांनंतर मेल्यास वृषोत्सर्गादिक कर्म, व प्रतिदिवशीं उदकदान व १६ मासिकें, पायसानें किंवा गुळानें दशपिंड, उदकुंभदान, पददान व दीपदानादिक प्रेतसंबंधी जें कर्तव्य तें पंचवर्षाधिक मुलाचें करावें. तसेंच ऋजुदर्भ, शुभ्र तीळ घेऊन, अपसव्यानें सर्व कर्म करावें," असें सांगितलें आहे. वर्षश्राद्ध तर होत नाहीं. कारण सपिंडी केल्यावांचून, पितृत्व येत नाहीं, व अनुपनीतास सपिंडीचा निषेध आहे. **दिवोदासीयां**त "अनुपनीत ब्राह्मणादिक मेल्यास त्याच्या सपिंडीवांचून शूद्रवत् सर्व क्रिया कराव्या. कारण, उदक व पिंडदान, चौल झालेल्यास विहित आहेत," असें सांगितलें आहे. अविवाहित मुलींस पिंडदानाचा विकल्प आहे. कारण "अविवाहित स्त्रियांस पिंड द्यावा असें कित्येक ह्मणतात," असी **गौतमो**क्ति आहे.

## ॥ अथ शूद्रस्य जात्याशौचम् ॥

तत्र मनुपराशरगौतमाद्यैः शूद्रो मासेन शुद्ध्यतीति मासमात्रमुक्तं । याज्ञवल्क्यस्तु ॥ त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः [ या० स्मृ० अ० ३ श्लो० २२ ] इति पंचयज्ञादिपरसच्छूद्राणां पंचदशाहमाह । अंगिरास्तु ॥ सर्वेषामेव वर्णानां सूतके मृतके तथा ॥ दशाहाच्छुद्धिरेतेषामिति शातातपोब्रवीदित्याह । शुद्धितत्त्वे देवलोऽपि ॥ आशौचं दशरात्रं तु सर्वेषामपरे विदुः ॥ निधने प्रसवे चैव पश्यंतः कर्मणः फलम् ॥ १ ॥ अत्यंतोत्कृष्टकर्मणो हानौ पीडावतो विप्रपरिचर्यापरं । शूद्रे दशरात्रमिति हारलताकारः । यत्तु दक्षः ॥ सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा ॥ षड्दशद्वादशाहाश्च पक्षो मासस्तथैव च ॥ १ ॥ मरणांतं तथा चान्यद्दश पक्षास्तु सूतके ॥ इति । अत्र मरणानंतरं सूतकादिभिन्नं सद्यः शौचादि ॥ षडहांतं यायावरादिपरं । अन्यपूर्वा यस्य गेहे भार्या स्यात्तस्य नित्यशः ॥ आशौचं सर्वकार्येषु देहे भवति सर्वदेति ब्राह्मोक्तेर्व्यवस्थेत्यपरार्कादयः । तत्र विवाहोत्तरं सर्वत्र शूद्रे पूर्णाशौचं । विवाहाभावेऽपि निर्गुणानां षडब्दोर्ध्वं मास इति गौडाः । सगुणानां विवाहाभावे षोडशाब्दोर्ध्वं मास इत्यपरार्कः । अत्रापदनापद्विषया गुणवदगुणपरा देशभेदाद्वा व्यवस्था । द्विजदासादीनां तु स्वाम्याशौचमेव । दासी दासश्च सर्वे वै यस्य वर्णस्य यो भवेत् ॥ तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकमित्यांगिरसोक्तेः । शातातपः ॥ तदाश्रितस्य तद्वत्स्यादिति । तं द्विजमाश्रित इत्यर्थः । अन्येषां कुंडगोलकादीनां सूतादीनां च प्रतिलोमानां मासमाशौचं । शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृता इति मनूक्तेः । अपध्वंसजा व्यभिचारजाः । शौचाशौचे प्रकुर्वीरन् शूद्रवद्वर्णसंकराः । इति शुद्धितत्त्वे ब्राह्माच्च । म्लेच्छादीनां तु नाशौचं । केवलं मलापकर्षणार्थं मूत्रपुरीषवच्छौचमात्रमिति विज्ञानेश्वरः । तत्र सूतके मातृवर्जमस्पृश्यत्वं नास्ति । सूतके सूतिकावर्जं संस्पर्शो न निषिध्यत इत्यांगिरसोक्तेः । पितुरपि स्नानोर्ध्वम् । माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुरिति स्मृतेः । शौचे तु देवलः ॥ स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः ॥ इदमल्पे । पूर्णाशौचे त्वंगिराः ॥ दशाहादित्रिभागेन कृते संचयने क्रमात् ॥ अंगस्पर्शनमिच्छंति वर्णानां तत्त्वदर्शिनः ॥ १ ॥ इदं कलौ निषिद्धं । अ-

स्थिसंचयनादूर्ध्वमंगस्पर्शनमेव चेति हेमाद्रावादिपुराणे कलिवर्ज्येपूक्तेः । सूतिकायास्तु दशाह एव । सूतिका सर्ववर्णेषु दशरात्रेण शुद्ध्यति ॥ ऋतौ च न पृथक्शौचं सर्ववर्णेष्वयं विधिरिति प्रचेतसोक्तेः । यत्तु ब्राह्मे ॥ ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ॥ गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव चेति । तदसच्छूद्रपरम् । कर्माहर्तां त्वाह पैठीनसिः ॥ सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीं ॥ एतच्च विंशतिरात्रमाशौचोत्तरं ज्ञेयं । अन्यथा मासाशौचे सपिंडानामाशौचे मध्ये तस्याः कर्मार्हतेत्यनौचित्यात् । दशरात्रपर्यंतं विधिवैषम्याच्च । आपस्तंबः ॥ क्षत्रविट्शूद्रजातीनां ये स्तो मृतकसूतके ॥ तेषां तु पैतृकं शौचं विभक्तानां तु मातृकम् ॥ १ ॥ इति । मनुः ॥ दशाहं शावमाशौचं सपिंडेषु विधीयते [ म० स्मृ० अ० ५ श्लो०५९ ] ॥ दशाहपदं स्वाशौचपरम् । तथा । शवस्पृशो विशुद्ध्यंति त्र्यहात्तूदकदायिनः ॥ सोदका इत्यर्थः । अग्निपुराणे ॥ सपिंडता तु सर्वेषां गोत्रतः साप्तपौरुषी ॥ समानोदकभावश्च निवर्तेताचतुर्दशात् ॥ १ ॥ जन्मनाम स्मृतेरेके तत्परं गोत्रमुच्यते ॥ समानोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् ॥ २ ॥ प्रयोगपारिजाते अग्निस्मृतौ ॥ स्त्रीजन्मनि सपिंडश्च सोदकश्च त्र्यहाच्छुचिः ॥ स्त्रीषु त्रिपुरुषं ज्ञेयं सपिंडत्वं द्विजोत्तमाः ॥ १ ॥ वसिष्ठः ॥ अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते ॥ इदमाशौचमौरसस्यैव । दत्तकाद्येकादशपुत्राणां जनने मरणे वा द्वयोः पित्रोस्त्रिरात्रमेव । तदुक्तं स्मृतिकौमुद्यां ब्राह्मे ॥ औरसो यदि नो पुत्रस्त्वथवा पुत्रिकासुतः ॥ विद्यते तत्र तेषां तु विज्ञेयाः क्षेत्रजादयः ॥ १ ॥ दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव चेत्युपक्रम्य । एकादश पृथग्गोत्रा वंशमात्रकरास्तु ते ॥ श्राद्धादि दासवत्सर्वे तेषां कुर्वंति नित्यशः ॥ २ ॥ सूतके मृतके वापि त्र्यहाशौचस्य भागिनः ॥ शुद्धितत्त्वेप्येवम् । एवं जनकस्यापि । बैजिकादभिसंबंधादनुरुंध्यादघं त्र्यहमिति [ म० अ० ५ श्लो० ६३ ] मनूक्तेः । एवं जनकपालकपितृमातृमृतौ दत्तकानां त्र्यहमेव । अयं च त्र्यहो विप्रपरः । शूद्राणां त्वत्र द्वादशाहः । यत्र त्रिरात्रं विप्राणामाशौचं संप्रदृश्यते ॥ तत्र शूद्रे द्वादशाहं षण्णव क्षत्रवैश्ययोरिति ऋष्यशृंगोक्तेरिति मदनपालः । यत्र वर्णविशेषानुपादानेन त्रिरात्रं यथा सोदके दत्तकादौ च तत्र द्वादशाहः शूद्रे । न तु वयोवस्थानिमित्ते । तुल्ये वयसि सर्वेषामतिक्रांते तथैव चेति व्याघ्रपादोक्तेः । ऋष्यशृंगादिवचनानि शिष्टविगानान्नादर्तव्यानीति विज्ञानेश्वरादयः । देशभेदाद्व्यवस्थेति मदनपालः । एवं व्यभिचारिणीनां स्त्रीणां दत्तकादीनां च प्रसवे मरणे च पूर्वापरभर्त्रोः पित्रोश्च त्रिरात्रं । तथा च त्रिरात्रानुवृत्तौ विष्णुः ॥ अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ॥ परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥ १ ॥ मरीचिः । सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ॥ एकाहस्तु सपिंडानां त्रिरात्रं यत्र वै पितुः ॥ १ ॥ यत्तु याज्ञवल्क्यः ॥ अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु चेत्यहोरात्रमाह । तत्सपिंडपरं देशपरं वा । परपत्नीसुता दत्तकादयः । बृहस्पतिः ॥ अन्याश्रितेषु दारेषु परपत्नीषु तेषु च ॥ मृतेष्वाप्लुत्य शुद्ध्येत्तु त्रिरात्रेण द्विजोत्तमः ॥ १ ॥

माधवीये हारीतः ॥ परपूर्वासु भार्यासु पुत्रेषु च कृतेषु च ॥ भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु सपिंडतः ॥ १ ॥ शूद्रे तु द्वादशरात्रं प्रागुक्तं । परपत्नी स्वयं संगृहीता परपूर्वा । इदं सवर्णासु । हीनवर्णासु तु आशौचाभावः । आशौचं तु त्रिरात्रं स्यात्स-मवर्णेषु निश्चितमिति ब्राह्मोक्तेः ॥ पूर्वापरभर्तुरुत्पन्नपुत्रयोस्त्वाह मरीचिः ॥ मातु-रैक्याद्द्विपितृकौ भ्रातरावन्यगोत्रजौ ॥ एकाहं सूतकं तत्र त्रिरात्रं मृतके तयोः ॥ १ ॥ शूद्रे तु विवाहाभावे षड्वर्षोर्ध्वं जात्याशौचमिति केचित् । तथा च काश्यपांगिरसौ शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पंचभिः ॥ अतऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥ १ ॥ षड्वर्षांतमतीतो यः शूद्रः स म्रियते यदि ॥ मासिकं तु भवे-च्छौचमित्यांगिरसभाषितम् ॥ २ ॥ मेधातिथिरपि ॥ प्रागष्टमाच्छुचिः प्रोक्तोऽन्यै-स्त्वाषोडशाद्बाल इति ॥ येऽपि षोडशाद्बाल्यनिवृत्तिमाहुस्तेमामप्यष्टमादूर्ध्वं मासि-क्येव शुद्धिः । ऊर्ध्वं तु षड्भ्यो वर्षेभ्यः शुद्धिः शूद्रस्य मासिकीति स्मृतेः अष्ट-वर्षस्य मास इत्यन्यत्रोक्तमित्याह । अपरार्के शंखस्तु विवाहाभावे षोडशवर्षोर्ध्वं मासमाह । अनूढभार्यशूद्रस्तु षोडशाद्वत्सरात्परम् ॥ मृत्युं समधिगच्छेच्चेन्मासात्त-स्यापि बांधवाः ॥ १ ॥ शुद्धिं समधिगच्छंति नात्र कार्या विचारणा [ शं० स्मृ० अ० १५ ] इति । यत्तु मदनपारिजाते हारीतः ॥ आमौंजीबंधनाद्विप्रः क्षत्रियश्च धनुर्ग्रहात् ॥ आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहादिति । तत्रापि वस्त्रद्वयं षोडशव-र्षपरमेव । यत्तु मदनो द्वादशे वस्त्रद्वयमाह तन्निर्मूलम् । अत्र सदसच्छूद्रपरा आ-पदनापद्विषया व्यवस्था । ऊढकन्यानां तु पितृगृहे प्रसवे एकरात्रं । मरणे त्रिरा-त्रमिति विज्ञानेश्वरापरार्कौ । माधवस्तु प्रसवेऽपि त्रिरात्रं पित्रोः । एकरात्रं बंधुव-र्गस्य । दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा ॥ तद्बंधुवर्गस्त्वेकेन शुचिस्तज्जन-कस्त्रिभिरिति ब्राह्मोक्तेरित्याह । कल्पतरौ शुद्धितत्त्वे च कौर्मे ॥ दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा । म्रियते वा तदा तस्याः पिता शुद्ध्येत्त्रिभिर्दिनैः ॥ १ ॥ पति-गृहे प्रसवे पित्रादीनामाशौचं नास्ति । मृतौ पित्रोस्त्रिरात्रमस्त्येव । प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च ॥ मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधीति माध-वीये कार्ष्णाजिनिस्मृतेः । सोदराणां तु भगिनीमृतौ शुद्धितत्त्वे कौर्मे ॥ आदंता-त्सोदरे सद्य आचूडादेकरात्रकम् ॥ आप्रदानात्त्रिरात्रं स्याद्दशरात्रमतः परम् ॥ १ ॥ बृहस्पतिस्तु पक्षिणीमाह ॥ श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले ॥ पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥ १ ॥ पित्रोर्मृतौ तु माधवीये वृद्धमनुः ॥ पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् ॥ त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः ॥ १ ॥ भ्रातृभगिन्योः परस्परं पक्षिणी । परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेदिति ब्राह्मात् । षडशीतौ चैवं । त्रिंशच्छ्लोक्यां ॥ प्रेतेष्वाचार्यमातामहदुहितृ-सुतश्रोत्रियर्त्विक्सयाज्यस्वस्त्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तूभयत्र ॥ पक्षि-ण्याशौचमृत्विग्दुहितृसुतसहाध्यायिबंधुत्रयांतेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिनेय-प्रयाणे ॥ १ ॥ मातामह्यां च पित्रोः स्वसरि च विरतौ मातुले मातुलान्यां चाथो

सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे ॥ शिष्योपाध्यायबंधुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरमृतौ मातुले चैकरात्रम् ॥ १ ॥ रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसंबंधयुक्ते स्नानं वासोयुतं स्यादिदमपि सकलं सर्ववर्णेषु तुल्यम् ॥ अत्र मूलं माधवीये मिताक्षरायां च ज्ञेयम् । दौहित्रभागिनेययोरनूढयोः पक्षिणी । ऊढयोस्त्रिरात्रम् । संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ॥ संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थित इति वृद्धमनूक्तेः । संस्कृते दाहेनेति गौडाः । तन्न । विशेषवैयर्थ्यात् । यत्रैकमातुलादौ पक्षिण्येकाहावुक्तौ तत्र सन्निधिविदेशाभ्यां व्यवस्था ॥ श्रोत्रिये स्वगृहे मृते त्रिरात्रम् । श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेदिति स्मृतेः । एकग्रामस्थिते त्वेकाहः । बंधुत्रयमुक्तं मिताक्षरायाम् ॥ आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ॥ आत्ममातुलपुत्राश्च विज्ञेया आत्मबांधवाः ॥ ११ ॥ पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ॥ पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबाधवाः ॥ २ ॥ मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ॥ मातुर्मातुलपुत्राश्च विज्ञेया मातृबांधवाः ॥ ३ ॥ अत्र पक्षिणी । गौडास्तु ॥ समानोदकानां त्र्यहो गोत्रजानामहः स्मृतम् ॥ मातृबंधौ गुरौ मित्रे मंडलाधिपतौ तथेति जाबालोक्तेर्मातृबंधुष्वेकाहमाहुः । यत्तु माधवीये प्रचेताः ॥ मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरोः ॥ मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यतीति । तत्स्वगृहमृतौ ज्ञेयम् ॥ अन्यत्र तु वृद्धमनुः ॥ पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशां ॥ श्वशुरयोः सन्निधौ त्रिरात्रम् । असन्निधौ पक्षिणी । देशांतरे एकरात्रम् । शालकेऽपि स्वदेशे एकाहः देशांतरे स्नानं । आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वश्रूश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमिति माधवीये विष्णूक्तेः ॥ हरदत्तोऽप्येवमाह । श्वशुर्यः शालकः । गौडा अप्येवम् । तदुक्तं षडशीत्याम् ॥ एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा ॥ ये मातामहयोश्चैव भगिन्यौ तत्प्रजाश्च याः ॥ १ ॥ मातुलाः स्वस्य पित्रोश्च पत्न्यश्चैषां प्रजाश्च याः ॥ मातरश्चेति सर्वेषु पक्षिणी स्वगृहे त्र्यहम् ॥ २ ॥ एवं श्वशुरजामातृदौहित्रविपदि स्मृतम् ॥ पितामही च पितामहश्चेत्येकशेषः । यत्तु वृद्धमनुः ॥ भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते ॥ मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥ १ ॥ शालके तत्सुते चैव सद्यः स्नानेन शुद्ध्यतीति । तद्भ्रात्रादौ देशांतरे शालकसुतजामात्रोः स्वदेशे ज्ञेयम् ॥ विष्णुपुराणे ॥ असपिंडे स्ववेश्मनि मृते एकरात्रं । प्रधानगृहमृतौ तु त्रिरात्रमिति माधवः ॥ शुद्धितत्त्वे बृहन्मनुः । श्वशूद्रपतिताश्चांत्या मृताश्च द्विजमंदिरे ॥ द्विजेत्युपलक्षणं संबुद्धिर्वा । शौचं तत्र प्रवक्ष्यामि मनुना भाषितं पुरा ॥ १ ॥ दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः ॥ द्वाभ्यां तु पतिते गेहे चांत्ये मासचतुष्टयात् ॥ २ ॥ अंत्यजे वर्जयेद्गेहमित्येवं मनुरब्रवीत् ॥ अंत्यो म्लेच्छः अंत्यजः श्वपाक इति वाचस्पतिः । मनुः ॥ द्विजस्य मरणे वेश्म विशुद्ध्यति दिनत्रयात् ॥ संवर्त्तः ॥ गृहशुद्धिं प्रवक्ष्यामि अंतस्थशवदूषिते ॥ प्रोत्सृज्य मृन्मयं भांडं सिद्धमन्नं तथैव च ॥ १ ॥ गोमयेनोपलिप्याथ छागेनाघ्रापये-

त्ततः ॥ ब्राह्मणैर्मंत्रपूतैश्च हिरण्यकुशवारिभिः ॥ २ ॥ सर्वमभ्युक्षयेद्वेश्म ततः शुद्ध्यत्यसंशयम् । क्रियाकर्तुस्तु मूल्याभावेऽपि पूर्णाशौचम् । निरन्वये सपिंडे तु मृते सति दयान्वितः ॥ तदाशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियामिति माधवीये ब्राह्मोक्तेः ॥ दिवोदासीये ॥ सगोत्रो वासगोत्रो वा योऽग्निं दद्यात्सखे नरः ॥ सोपि कुर्यान्नवश्राद्धं शुद्ध्येत्तु दशमेऽहनि ॥ १ ॥ युद्धहते तु मनुः ॥ उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च ॥ सद्यः संतिष्ठते यज्ञस्तथा शौचमिति स्थितिः ॥ १ ॥ यज्ञोंत्यकर्म । सर्वं तदेवेत्यर्थः । यत्तु आहवेऽपि हतानां च एकरात्रमशौचकमिति तद्युद्धक्षते कालांतरमृते ज्ञेयम् ॥ असन्निधौ स्नानं । सन्निधावेकाह इति माधवः ॥ यतु भारते । राजधर्मेषु ॥ अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ॥ न ह्यन्नमुदकं तस्य न स्नानं नाप्यशौचकमिति श्राद्धादिनिषेधः स पुत्राद्यभावपरः ॥ अत एव तत्र कर्मादीनां श्राद्धाद्युक्तम् ॥ अन्ये तु यतिवद्दशपिंडनिषेधमाहुः । शुद्धितत्त्वेऽग्निपुराणे ॥ दंष्ट्रिभिः शृंगिभिर्वापि हता म्लेच्छैश्च तस्करैः ॥ ये स्वाम्यर्थे हता यांति राजन्स्वर्गं न संशयः ॥ १ ॥ सर्वेषामेव वर्णानां क्षत्रियस्य विशेषतः ॥ यत्तु बृहस्पतिः ॥ डिंबाहवे विद्युता च राज्ञा गोविप्रपालने ॥ सद्यः शौचं मृतस्याहुरुयहं वान्ये महर्षयः ॥ १ ॥ तत्र शस्त्रं विना तेन वा पराङ्मुखहते त्रिरात्रं । राज्ञा वध्ये हते सद्यः शौचं । अन्यत्र त्रिरात्रम् ॥ तत्रैव व्याघ्रः ॥ क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा ॥ आसप्ताहात्त्रिरात्रं स्याद्दशरात्रमतः परं ॥ १ ॥ शस्त्राघाते त्र्यहादूर्ध्वं यदि कश्चित्प्रमीयते ॥ आशौचं प्राकृतं तत्र सर्ववर्णेषु नित्यशः ॥ २ ॥ शस्त्राघातक्षतंविना शवस्पर्शे निर्हारे च तद्गृहवासे तदन्नाशने च शवजातीयं पूर्णाशौचम् ॥ तद्गृहवासमात्रे त्र्यहः । उभयाभावे एकाहः । भृतिग्रहेण निर्हारे पूर्णो मासः । विजातीयनिर्हारे शवजातीयम् । भृतिग्रहणे द्विगुणम् । आपदि समं । सोदकनिर्हारे पूर्णम् । शवालंकरणे ज्ञानतः कृच्छ्रपादः । अज्ञानादुपवासः । अनाथसवर्णनिर्हरणेऽग्निदाने चानंतफलम् । स्नानमात्रेण शुद्धिः । वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुद्ध्यति । इत्यपरार्के वृद्धपराशरोक्तेः । मातुलत्वादिसंबंधे स्नेहे वा त्रिरात्रम् ॥ गौतमव्याख्यायां वृद्धात्रिः । सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम् ॥ आर्तवाद्द्विगुणा सूतिस्ततोऽपि शवदाहकः ॥ १ ॥ अनुगमने तु सपिण्डे न दोषः । असपिण्डे तु समवर्णे स्नानं घृताशनं पक्षिणी च । उत्तमे स्नानमात्रम् । रोदने तु शूद्रस्य शूद्रे स्पर्शं विना संचयनात्पूर्वमेकाहः । ऊर्ध्वं सज्योतिरिति माधवः ॥ शुद्धितत्त्वे पारस्करः ॥ अस्थिसंचयनादूर्ध्वं मासं यावद्द्विजातये ॥ दिवसेनैव शुद्ध्यंति वाससां क्षालनेन च ॥ १ ॥ सजातेर्दिवसेनैव त्र्यहात्क्षत्रियवैश्ययोः ॥ सपिण्डानां न दोषः । मिताक्षरायां पारस्करस्तु ॥ मृतस्य बांधवैः सार्धं कृत्वा तु परिदेवनम् ॥ वर्जयेत्तदहोरात्रं दानश्राद्धादि कर्म च ॥ १ ॥ इति सर्वत्रैकमाह । आशौच्यन्नभक्षणे त्वज्ञानेऽन्नजरणावधि ज्ञानतः शूद्रस्य स्नानमात्रम् ॥

यानंतर शूद्रास जात्याशौच सांगतो.

याविषयीं—**मनु, पराशर, गौतमा**दिकांनीं—"शूद्र एक महिन्यानंतर शुद्ध होतो," असें १ मासपर्यंत शूद्रास आशौच सांगितलें आहे. **याज्ञवल्क्यानें** तर, "असच्छूद्र १ मासानें, व पंचमहायज्ञादि करणारा अर्थात् धर्मिष्ठ शूद्र १५ दिवसांनीं शुद्ध होतो," असें सांगितलें आहे. **अंगिरा** तर, "सर्व वर्णांस सूतक व मृताशौच १० दिवस धरल्यानें शुद्धि होते, असें **शातातपा**चें मत आहे," असें ह्मणतो. **शुद्धितत्त्वां**त **देवल**ही ह्मणतो कीं; "सर्व वर्णांस, त्यांचा कोणी मेला किंवा जन्मला असतां १० दिवस आशौच. शूद्रास ३० दिवस आशौच असणें हें साधारण रीत्या योग्य आहे; परंतु, तन्निमित्त अति उत्कृष्ट कर्मांची हानि होत असेल, अथवा अति पीडा झाल्यामुळें तितके दिवस धरवत नसेल अथवा त्यामुळें विप्रसेवेंत अंतर पडत असल्यास, त्यानें दशरात्र आशौच धरावें," असें **हारलताकर्ता** ह्मणतो. जें **दक्षा**नें ह्मटलें आहे कीं, "तत्काल शुद्धि, तसेंच १।३।४।६।१०।१२।१५। दिवस, एक मास किंवा मरणपर्यंत आशौच धरावें; असे सूतकाविषयीं १० पक्ष आहेत." तें सूतकादिकांहून भिन्न आहे. सद्यःशुद्धीपासून ६ दिवसपर्यंतचे जे पक्ष सांगितले आहेत, ते यायावरादिपर[१] आहेत, व जें आमरणपर्यंत आशौच सांगितलें आहे तें—"विवाहित स्त्रीशीं ज्यानें विवाह करून घेतला असेल, व ती ज्याच्या घरांत राहत असेल, त्यास नेहमीं सर्व कार्यांविषयीं आशौच आहे," असें **ब्रह्मपुराणां**त सांगितलें आहे. यावरून "तो पक्ष पुनर्विवाह करून घेणाऱ्यास लागू आहे. अशी त्या वचनाची व्यवस्था करावी," असें **अपरार्का**दिक ह्मणतात. शूद्रांस विवाहानंतर सर्वत्र पूर्ण (३० दिवस) आशौच आहे. "कदाचित् विवाह न झाल्यास, निर्गुण शूद्रांस ६ वर्षांनंतर १ मास," असें **गौड** ह्मणतात. "धर्मिष्ठ शूद्रांस विवाहाच्या अभावींही १६ वर्षांवर १ मास आशौच," असें **अपरार्क** ह्मणतो. येथें आपत्ति व तद्भिन्नकाल, गुणवान् व निर्गुणी, व देशभेद इत्यादिकांनीं व्यवस्था जाणावी. विप्रसेवा करणाऱ्या शूद्रांस, ज्यांची ते सेवा करितील त्यांचेंच आशौच आहे. कारण—"ज्या वर्णांचे जे दास किंवा दासी होतील त्यांनीं त्या वर्णाचें आशौच धरावें; पण दासींस १ मास धरलें पाहिजे," असें **अंगिरा** ह्मणतो. **शातातप** ह्मणतो—"ज्याचा जो आश्रित (सेवक) त्यास यजमानासम आशौच." अन्य कुंडगोलकादिक[२] व सूतादिक प्रतिलोम-वर्णांस १ मास आशौच आहे. कारण "व्यभिचारापासून झालेले सर्व वर्ण शूद्रसमानधर्मे होत," असें **मनु**वचन आहे. "शुद्धता व आशौच, हीं संकर वर्णांनीं शूद्रवत् करावीं;" असें **शुद्धितत्त्वां**त **ब्रह्मपुराण**वचन आहे. म्लेच्छादिकांस आशौच

१ ही एक प्रकारची वृत्ति आहे. **महाभारतां**त जरत्कारु नांवाचा जो ऋषि वर्णन केला आहे तो हीच वृत्ति धारण करीत होता. यांत कोणापाशीं याचना करावयाची नाहीं, हा मुख्य निर्बंध आहे. २ नवरा जिवंत असतां जारापासून होतो तो कुंड, व तो मेल्यावर जारापासून होतो तो गोलक होय. ह्यांचें लक्षण वगैरे पुढें येईल.

नाहीं. "केवल मलदूरीकरणार्थ मूत्रपुरीषवत् त्यांनीं शौच करावें." असें **विज्ञानेश्वर** ह्मणतो. सूतकांत बाळंतिणीवांचून इतरांस अस्पृश्यत्व नाहीं. कारण,—"सूतकांत बाळंतिणीवांचून स्पर्शनिषेध नाहीं," अशी **आंगिरसोक्ति** आहे. पित्यासही स्नानानंतर अस्पृश्यत्व नाहीं. "सूतकांत माता १० दिवसांनीं, व पिता स्नानानें शुद्ध होतात," अशी **स्मृति** आहे. शौचाविषयीं देवल ह्मणतो—"एकंदर मृताशौचाचे तीन विभाग करून, २ झाल्यावर तिसऱ्यांत स्पर्शदोष नाहीं," हें अल्पाशौचांत. पूर्णाविषयीं तर **अंगिरा** ह्मणतो,—"दशाहादिकांचे ३ भाग करून, अस्थिसंचयन झाल्यावर स्पर्शदोष नाहीं, असें तत्त्वदर्शी ह्मणतात." हें **देवल** व **अंगिराचें** मत कलींत निषिद्ध आहे. कारण,—"चिता भरल्यावर अंगस्पर्श सांगितला आहे तो कलींत करूं नये," असें **हेमाद्रि** इत्यादिकांत कलिवर्ज्य प्रकरणीं **पुराणवचनां**त सांगितलें आहे. बाळंतीण तर दशरात्रींनीं शुद्ध होते. "सर्व वर्णांत सूतिका दशरात्रानें शुद्ध होते, व ऋतुनिमित्त वेगळें शौच नको. हा विधि सर्व वर्णांस समान आहे," असें **प्रचेत्याचें** मत आहे. जें **ब्रह्मपुराणांत**—"प्रसूत झालेली ब्राह्मणी, क्षत्रिया, व वैश्या १०; व शूद्रस्त्री १३ दिवसांनंतर स्पर्शयोग्य होते," असें सांगितलें आहे तें, असच्छूद्रपर समजावें. बाळंतिणीस गृहकर्म करण्याच्या योग्यतेविषयीं **पैठीनसि** ह्मणतो,—"पुत्रवती बाळंतिणीला २० व कन्यावतीस ३० दिवसांनंतर गृहकर्म करण्यास लावावी." हे २० दिवस १ मास आशौचानंतर गणावे नाहीं तर, शूद्रांस १ महिना आशौच सांगितलें आहे, तें सपिंडांनीं धरावें व इनें २० दिवसांनीं शुद्ध व्हावें हें उचित नाहीं. कदाचित् दशाहपक्ष घेतल्यास विधिवैषम्य येईल. **आपस्तंब** ह्मणतो,—"क्षत्रिय, वैश्य, व शूद्रजातींस जीं मृतकें व सूतकें येतात त्यांत अविभक्तांस पितृसंबंधी व विभक्तांस मातृसंबंधी शौच जाणावें." **मनु** ह्मणतो—"सपिंडांस मृताशौच १० दिवस विहित आहे." येथें दशाहपद स्वकीय आशौचपर आहे. तसेंच प्रेतस्पर्श करणारे सोदक ३ दिवसांनीं शुद्ध होतात. **अग्निपुराणांत**—"सर्वांस स्वकीय गोत्राच्या ७ व्या पुरुषापर्यंत सापिंडता असते. नंतर १४ पुरुषपर्यंत सोदकता असते. त्यापुढें जन्म व नांवाचें स्मरण असे तोंपर्यंत सगोत्रता असते. सोदकांस ३ दिवस, सपिंडांस १० व सगोत्रांस १ दिवस आशौच," असें सांगितलें आहे. हें औरस पुत्राचेंच. दत्तकादि ११ पुत्रांस जनन किंवा मरण झाल्यास, जनक पालक पित्यांचें त्रिरात्रच. तेंच **स्मृतिकौमुदींत** **ब्रह्मपुराणांत** सांगितलें आहे. जसें—"औरस नसल्यास पुत्रिकासुत किंवा क्षेत्रजादिक किंवा दत्तक, स्वयंदत्त, कृत्रिम, क्रीत इत्यादि ११ भिन्नगोत्रीय जे पुत्र ते वंशकर मात्र होतात. त्यांचें दासासारखें श्राद्धादि करावें. त्यांचें आशौचही त्रिरात्रच." **शुद्धितत्त्वांत**ही असेंच सांगितलें आहे. दत्तकानें जनक पित्याचेंहि आशौच ३ दिवस धरावें. कारण,—"बीजसंबंधास्तव ३ दिवस आशौच धरावें," असें **मनु**वचन आहे. असेंच जनक, व पालक आई व बाप मेल्यास दत्तकांस ३ दिवसच. हा पक्ष ब्राह्मणपर आहे. शूद्रांस तर

येथें १२ दिवस धरलें पाहिजे. कारण—"जेथें विप्रांस त्रिरात्राशौच सांगितलें आहे तेथें शूद्रांस १२, वैश्यांस ९, क्षत्रियांस ६ दिवस जाणावें," असें **ऋष्यशृंगवचन** आहे. ह्मणून "१२ दिवस," असें **मदनपाल** ह्मणतो. जेथें वर्णविशेष न सांगतां त्रिरात्र सांगितलें आहे—जसें पूर्वोक्त **अग्निपुराण** व **ब्राह्मपुराणवचनां**त सोदक व दत्तक यांचें आशौच सांगितलें आहे. तेथें शूद्राविषयीं १२ दिवस समजावें. वयोवस्थानिमित्तक आशौचाविषयीं हें नाहीं. कारण—"सर्व वर्णांस वयोवस्थानिमित्तक व अतिक्रांत आशौच समान आहे," असी **व्याघ्रपादो**क्ति आहे. येथें "पूर्वोक्त **ऋष्यशृंगा**दिवचनें शिष्टांनीं न ग्रहण केल्यावरून मानू नयेत," असें **विज्ञानेश्वरादिक** ह्मणतात. "देशभेदानें व्यवस्था करावी," असें **मदनपाल** ह्मणतो. असेंच व्यभिचारिणीच्या व दत्तकादिकांच्या प्रसवीं व मरणीं १ ला व २ रा नवरा व बाप यांस त्रिरात्र. तसेंच त्रिरात्रानुवृत्तीविषयीं **विष्णु** ह्मणतो—"औरसभिन्न पुत्र झाले अथवा मेले व पाटाच्या स्त्रिया प्रसूत झाल्या किंवा मेल्या तर त्रिरात्र." **मरीचि** ह्मणतो,—"परपूर्वा स्त्री व दत्तक यांचें सूतक व मृतक ३ दिवस. सपिंडांस १ दिवस. सगोत्रांस स्नान मात्र." जें **याज्ञवल्क्य**—"औरसभिन्न पुत्र व पाटाच्या बायकांचें अहोरात्र आशौच," असें ह्मणतो, तें सपिंडपर किंवा देशभेदपर असें समजावें. परपत्नीचे पुत्र ह्मणजे दत्तकादि हे होत. **बृहस्पति** ह्मणतो—"अन्याश्रित स्त्रिया अथवा परपत्नीपुत्र मेल्यास स्नान करून त्रिरात्रानें शुद्ध होतो." **माधवीयां**त **हारी**त ह्मणतो—"परपूर्व स्त्रिया व दत्तक पुत्र मेल्यास, नवरे व बाप यांस त्रिरात्र, व सपिंडांस १ दिवस आशौच." येथें शूद्रांस १२ दिवस असें पूर्वी सांगितलें आहे. परपत्नीशब्दानें दुसऱ्यानें विवाहित समानवर्ण अशी स्त्री आपण संग्रह केली तर तिला परपूर्वा ह्मणावें. हें सवर्ण स्त्रियांविषयीं. हीनवर्ण स्त्रियांचें तर आशौचच नाहीं; कारण, "समानवर्ण परपूर्व स्त्रियांचेंच खरोखर त्रिरात्र आशौच आहे." असें **ब्राह्मवचन** आहे. आतां पहिला व दुसरा नवरा यांजपासून झालेल्या पुत्रांविषयीं तर **मरीचि** ह्मणतो,—"अशा पुत्रांची माता १ आहे ह्मणून त्यांस द्विपितृक व अन्यगोत्रज बंधु असें ह्मणावें. ते परस्पर मेल्यास त्रिरात्र आशौच, व सूतक १ रात्र समजावें." शूद्रास तर विवाह न झाला तरी—"६ वर्षांनंतर जात्याशौच धरावें लागतें," असें **कित्येकांचें** मत आहे. तसेंच **कश्यप** व **अंगिरा** ह्मणतात—"३ वर्षांहून कमी वयाचा शूद्र मेल्यास ५ दिवस, नंतर ६ वर्षांपर्यंत १२ दिवस, व त्यापुढें १ महिना आशौच धरावें." **मेधातिथि**ही—"८ वर्षांपूर्वी बाल नेहमीं शुद्ध आहे, अन्य धर्मवेत्त्यांनीं—१६ वर्षेपर्यंत बाल शुद्ध आहे," असें झटलें आहे. जे १६ वर्षांनंतर बाल्यनिवृत्ति होते ह्मणतात त्यांच्या मतानेंहि ८ वर्षांपासून एक महिन्यानें शुद्धि होते. कारण,—'शूद्रास ६ वर्षांनंतर, १ महिन्यानें शुद्धता होते,' अशी **स्मृति** आहे. व '८ वर्षांच्यास १ महिना,' असें अन्यत्र सांगितलें आहे, असें ह्मणतो. **अपरार्कां**त **शंख** तर—'विवाह न होतांही १६ वर्षांनंतर १ महिना आहे,' असें

ह्मणतो. जसें "अविवाहित शूद्र १६ वर्षांवर मेल्यास तद्बांधव १ मासानें शुद्ध होतात. याविषयीं विचार नको." जें **मदनपारिजातां**त **हारीतानें** ह्मटलें आहे कीं, "उपनयन झाल्यावर विप्र, धनुर्ग्रहणापासून क्षत्रिय, चाबुक घेतल्यानंतर वैश्य, आणि वस्त्रद्वय घेतल्यानंतर शूद्र, पूर्ण आशौचास अधिकारी होतात." तेथेंहि वस्त्रद्वय-शब्द १६ वर्षेपरच आहे. जें **मदनपारिजात**—"बारावे वर्षीं शूद्रानें वस्त्रद्वय ग्रहण करावें," असें ह्मणतो तें निर्मूल आहे. येथें सदसच्छूद्रपर व आपदनापद्विषयक व्यवस्था जाणावी. विवाहित मुली—"पितृगृहीं प्रसूत झाल्यास १ व मेल्यास ३ रात्र," असें **विज्ञानेश्वर** व **अपरार्क** ह्मणतात. **माधव** तर—"प्रसवींहि मातापितरांस ३ रात्र. बंधुवर्गास १ रात्र. कारण,—'दान केलेली कन्या पितृगृहीं प्रसूत किंवा मृत झाल्यास बंधुवर्ग १, व मातापिता ३ दिवसांनीं. शुद्ध होतात,' असें **ब्राह्म**-वचन आहे. ह्मणून पूर्वोक्त योग्य," असें ह्मणतो. **कल्पतरु** व **शुद्धितत्त्वां**त **कूर्मपुराणां**त—"दिलेली कन्या पितृगृहांत प्रसूत किंवा मृत होईल तर, ३ दिवसांनीं पिता शुद्ध होतो," असें सांगितलें आहे. यावरून पतिगृहीं प्रसूत झाल्यास पित्रादिकांस आशौच नाहीं. तेथें मृत झाली तर ३ रात्र आहेच. कारण—"दिलेल्या किंवा न दिलेल्या संस्कृत व असंस्कृत मुली मेल्यास मातापितरांस त्रिरात्र, व इतरांस यथाविधि, असी **माधवीयां**त **कार्ष्णाजिनिस्मृ**ति आहे." सख्या भाऊबहिणींत भगिनी मेल्यास **शुद्धितत्त्वां**त **कूर्मपुराणां**त सांगितलें आहे कीं,—"दंतोत्पत्तीपर्यंत तत्काल स्नानानें, चौलापर्यंत १ रात्र, विवाहांपर्यंत त्रिरात्र, नंतर १० रात्रींनीं शुद्ध होतात." **बृहस्पति** तर—"पक्षिणी आहे"—ह्मणतो. जसें—"सासूसासरे, बहीण, मामी, मामा, मातापितर, व त्यांची बहीण इतक्यांचें पक्षिणी आशौच आहे." मातापितर मेल्यास **माधवीयां**त **वृद्धमनु** ह्मणतो—"मातापितर मेल्यास विवाहित कन्यांस त्रिरात्र; असें **यमानें** सांगितलें आहे." बहीण व भाऊ यांस एकमेकांचें आशौच पक्षिणी आहे. कारण, **ब्राह्मपुराणां**त—भ्रातृभगिनींस परस्परांचें पक्षिणीच सांगितलें आहे, **षडशीतीं**त असेंच आहे. **त्रिंशच्छ्लोकीं**त—"आचार्य, मातामह, मुलीचा मुलगा, श्रोत्रिय, ऋत्विज, सयाज्य, आणि भाचा हे मेल्यास त्रिरात्र आशौच. सोदकांस पक्षिणी. ऋत्विक्पुत्र, दौहित्र, सहाध्यायी, बंधुत्रय[१], शिष्य, सासू, सासरा, उत्तम मित्र, बहीण, भाचा, मातामही, मातापितरांच्या बहिणी, निर्गुण मावशी, मातुल, स्वदेशीय राजा, व ग्रामाधिपति, हे मेल्यास सज्योति[२]. शिष्य, गुरु, बंधुत्रय, गुरुकन्या, गुरुपत्नी, स्वगोत्री, सांगवेदाध्यायी हे स्वगृहीं मेले तर सज्योति. हे मातुलगृहीं मेल्यास १ रात्र. सहब्रह्मचारी किंवा स्वल्पसंबंधी असल्यास सवस्त्र स्नान करावें. हें सर्ववर्णसम आहे." याचें मूळ **माधवीयां**त व **मिताक्षरें**त पहावें. अविवाहित दौहित्र व भागिनेय यांचें पक्षिणी. विवाहिताचें त्रिरात्र आशौच आहे. कारण,—"दौहित्र किंवा भगिनीपुत्र संस्कृत मेल्यास त्रिरात्र. असं-

१ हे पुढें सांगेल. २ सज्योति—ह्मणजे नक्षत्रदर्शन होतांच शुद्ध होणें.

स्कृत मेल्यास पक्षिणी," असी **वृद्धमनू**क्ति आहे. येथें संस्कृत शब्दानें **गौड**—मंत्रवद्दाह घेतात. तें योग्य नाहीं; कारण—विषयाचें वैयर्थ्य होईल. जेथें एक मातुलादिकांविषयीं पक्षिणी व एकाह असे २ प्रकार सांगितले असतील, तेथें देशांतरभेदानें व्यवस्था ठेवावी. श्रोत्रिय स्वगृहीं मेल्यास त्रिरात्र.—"श्रोत्रिय मेल्यास त्रिरात्र अशुचि रहावें," असी **स्मृति** आहे. एका गांवांत असतील तर १ दिन. पूर्वोक्त बंधुत्रय **मिताक्षरेंत** उक्त आहे. तें—"आपल्या आतेचे, मावशीचे व मामाचे पुत्र ते आत्मबांधव. पित्याच्या आतेचे, मावशीचे व मामाचे पुत्र ते पितृबांधव. आईच्या आतेचे, मावशीचे व मामाचे पुत्र ते मातृबांधव." या सर्वांचें पक्षिणी आशौच, **गौड** तर—"सोदकांचें ३ दिवस, गोत्रजांचें व मातृबंधु, गुरु, मित्र व राजा यांचें १ दिवस धरावें;" असी **जाबालस्मृ**ति आहे ह्मणून "मातृबांधवांचें १ दिवस," असें ह्मणतात. जें **माधवीयां**त **प्रचेत्या**नें ह्मटलें आहे कीं, "मावशी, मातुल, सासू, सासरा, गुरु, ऋत्विज व परंपरागत यजमान मेल्यास त्रिरात्र," तें स्वगृहीं मेल्यास त्रिरात्र असें जाणावें. अन्यत्र तर **वृद्धमनु** ह्मणतो—"मावशी व आत मेल्यास पक्षिणी. श्वश्रूश्वशुरांचें सन्निध असतां त्रिरात्र, असन्निध असतां पक्षिणी, देशांतरीं १ रात्र. श्यालकाचें स्वदेशांत १ दिन, देशांतरीं स्नान." "आचार्यपत्नी, पुत्र, उपाध्याय, मातुल, सासू, सासरा, श्यालक, सहाध्यायी, शिष्य, यांचें १ रात्र," असी **माधवीयां**त **विष्णू**क्ति आहे. **हरदत्त**ही असेंच ह्मणतो. **गौडा**चेंही मत असेंच आहे. जें **षडशीतीं**त सांगितलें आहे कीं,—"मातृपितृभगिनी, मातामही व मातामह, तद्भगिनी व पुत्र, स्वमातुल, मातापितरांचे मातुल, तत्पत्नी व माता यांचें स्वगृहीं त्रिरात्र. अन्यगृहीं पक्षिणी. असेंच सासरा, जांवई, दौहित्र यांचें ध्यावें." व जें **वृद्धमनू**नें ह्मटलें आहे कीं,—"विवाहित भगिनी व उपनीत बंधु, मित्र, जामात, दौहित्र, भाचा, श्यालक, तत्पुत्र, यांचें आशौच नाहीं; तत्काल स्नानानें शुद्ध होतो;" तें बांधवादिकांचें परदेशीं व श्यालक, तत्पुत्र आणि जामाता यांचें स्वदेशीं असें समजावें. **विष्णुपुराणां**त,—"असपिंड असून तो स्वगृहीं मेल्यास १ रात्र," असें सांगितलें आहे. "मुख्य गृहीं मेल्यास त्रिरात्र धरावें," असें **माधव** ह्मणतो. **शुद्धितत्त्वां**त **बृहन्मनु** ह्मणतो—"शूद्र, पतित, कुत्रा, म्लेच्छ व अंत्यज हे ब्राह्मणगृहीं मेल्यास आशौच आहे. तें—कुत्र्याचें १०, शूद्राचें ३०, पतिताचें ६० दिवस, म्लेच्छाचें ४ महिने, व अंत्यज मेल्यास गृहत्याग करावा, असें **मनू**नें सांगितलें आहे." येथें अंत्यजशब्दानें—"श्वपाकाचें ग्रहण करावें," असें **वाचस्पति** ह्मणतो. **मनु** ह्मणतो कीं,—"स्वगृहीं अन्य ब्राह्मण मेल्यास ३ रात्रींनीं गृह शुद्ध होतें." **संवर्त** ह्मणतो—"शवदूषित गृहाची शुद्धि सांगतो—त्यांतलीं मातीचीं भांडीं व सिद्धान्न सर्व टाकून, जमीन गोमयानें सारवून, बकऱ्याकरवीं हुंगवावें, व ब्राह्मणाकरवीं अभिमंत्रित सुवर्णयुक्त उदक दर्भांनीं त्यांत शिंपडावें, ह्मणजे निःसंशय शुद्ध होतें." पैसे न घेतां परकीयाचें और्ध्वदेहिक केलें तर, त्यास कर्मांग पूर्णाशौच

आहे. "भिन्नगोत्रीय व सपिंडाचें दयेनें कर्म केल्यास त्याचें पूर्णाशौच धरून, पित्या-सम अंत्यकर्म करावें," असी **माधवीयां**त **ब्राह्मो**क्ति आहे. **दिवोदासीयां**त—"सगोत्री किंवा भिन्नगोत्री जो ज्यास अग्नि देईल, त्यानेंच ९ श्राद्धें करावीं. व १० व्या दिवशीं तो शुद्ध होतो," असें सांगितलें आहे. हें कर्मांग आशौच आहे. युद्धांत मेल्याविषयीं **मनु** ह्मणतो,—"युद्धीं जो शस्त्रांनीं मृत असेल त्याचें तत्काल अंत्यकर्म व आशौच निवृत्त होतें." जें युद्धांत मृताचें १ रात्र धरावें," असें सांगितलें तें युद्धीं घायाळ होऊन कालांतरीं मेल्याविषयीं आहे. "सन्निध असतां १ दिवस, नसल्यास स्नान," असें **माधव** ह्मणतो. जें **भारतीं राजधर्मां**त सांगितलें कीं,—"जो शत्रू-समोर, तत्काल मेला असेल तो, स्वर्गीं पूज्य होतो. अतएव तो अशोच्य आहे ह्मणून, पिंड व उदकदान, स्नान, आशौच, वगैरे तन्निमित्तक नाहीं," असा श्राद्धादि-कांचा निषेध आहे तो, मेलेल्यास कर्मकर्ते पुत्रादिक नसतील तर आहे. अतएव तेथें कर्मादिकांत श्राद्धादिक सांगितलें. **अन्य** तर—"संन्याशासारखें दशपिंड निषेध आहे," असें ह्मणतात. **शुद्धितत्वांत अग्निपुराणां**त—"व्याघ्रादिक दंष्ट्री किंवा बैलादिक शृंगी यांनीं व म्लेच्छ, चोर यांनीं मारलेले व जे यजमानाकरितां मेले ते निःसंशय स्वर्गास जातात. हें सर्व वर्णांस सम असून, क्षत्रियांस विशेष लागू आहे," असें उक्त आहे. जें **बृहस्पति** ह्मणतो—"युद्धीं विद्युल्लतेनें किंवा अपराधास्तव राजानें मारलेले व ज्यांनीं गोब्राह्मणरक्षणार्थ प्राणत्याग केला असेल, त्यांचें सद्यः शौच; किंवा अन्यऋषिमतें ३ दिवस आशौच धरावें." येथें २ पक्ष सांगितले आहेत तर—शस्त्रा-वांचून, किंवा पराङ्मुख होऊन मेल्यास ३ रात्र, राजानें मारल्यास तत्काल शुद्धि, अन्यत्र त्रिरात्र, अशी व्यवस्था करावी. **व्याघ्र** ह्मणतो—"क्षतानें मृताचें आशौच २ प्रकारचें आहे, ७ दिवसपर्यंत मेल्यास ३ रात्र, नंतर १०, घाय होऊन ३ दिवसांपुढें मेल्यास इतरांप्रमाणें हा सर्ववर्णसम विधि आहे." कोणासही शस्त्र लागल्यावांचून त्याचें प्रेत नेल्यास, किंवा त्याच्या गृहीं राहिल्यास, अन्न भक्षिल्यास, तज्जातीस जें विहित आशौच तें संपूर्ण धरावें. केवळ त्याच्या घरींच राहिल्यास ३ दिवस. दोनीं नसल्यास १ दिवस. मजुरीनें सजातीय शव नेल्यास १ मास. विजातीयास धर्मार्थ नेल्यास तज्जातीय आशौच. दाम घेतल्यास तद्द्विगुणित. आपत्कालीं तत्सम. येरवीं द्विगुणित. सोदकाचें शव नेल्यास संपूर्ण धरावें. प्रेतास जाणून अलंकार केल्यास पादकृच्छ्र प्रायश्चित्त. न जाणून केल्यास उपोषण. अनाथ समानवर्ण प्रेत नेलें किंवा दहन केल्यास अनंत पुण्य आहे व तो स्नानानें शुद्ध होतो. कारण, "अनाथ प्रेत वाहणारा व अग्नि देणारा स्नानानें शुद्ध होतो," असी **अपरार्कां**त **वृद्धपराशरो**क्ति आहे. मातुलादिक संबंधी व स्नेही यांचें त्रिरात्र. **गौतमव्याख्यें**त **वृद्धात्रि** ह्मणतो—"सूतकाहून द्विगुणित मृतक, चौपट आर्तव, आठपट बाळंतीण, त्याहून अधिक प्रेतदाहक अशुचि असतो." प्रेताबरोबर सपिंड गेल्यास त्यास दोष नाहीं. असपिंड असून समवर्ण असल्यास स्नान, घृतप्राशन, व पक्षिणी आशौच आहे. तोच आपल्याहून उत्तम असल्यास स्नान. "रडला तर शूद्रास स्पर्शावांचून अस्थिसंचय-

नाच्या पूर्वी १ दिवस. नंतर सज्योति" असें **माधव** ह्मणतो. **शुद्धितत्त्वांत पारस्कर** ह्मणतो—"अस्थिसंचयनानंतर १ मासपर्यंत १ दिवसानें सवस्त्र स्नानानें द्विजाति शुद्ध होतात. क्षत्रिय, वैश्य ३ दिवसांनीं, सपिंडांस दोष नाहीं." **मिताक्षरें**त तोच ह्मणतो—"मृताच्या बंधूंसह रोदन केल्यास अहोरात्र आशौच, हें सर्व वर्णांस समान." आशौचीचें अन्न न जाणून भक्षिल्यास, तें जिरेपर्यंत आशौच. जाणून तसें केल्यास शूद्रास स्नान विहित आहे.

## ॥ अथ दासाशौचम् ॥

तत्र स्वदास्युत्पन्नस्य दासस्य स्वसपिंडमृतौ स्नानमात्रात्स्वामिकार्ये स्पृश्यत्वम्। भक्तदासस्य त्र्यहोर्ध्वं । सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ॥ इति मिताक्षरायां स्मृत्यंतरात् । मूल्यकर्मकराः शूद्रदासीदासास्तथैव च ॥ स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः ॥ १ ॥ इति शातातपोक्तेश्च । अत्रैव दत्तादित्रयोदशदासानां स्वाम्याशौचसमसंख्यदिनोर्ध्वं स्वस्य मासाद्याशौचे सत्यपि स्वामिकार्ये स्पृश्यता । दासांतेवासिभृतकाः शिष्याश्चैकत्रवासिनः ॥ स्वामितुल्येन शौचेन शुध्यंति मृतसूतके ॥ १ ॥ इति बृहस्पतिस्मृतेः । स्वस्यादृष्टार्थकार्ये मासाद्याशौचं सर्वेषामस्त्येव । एवं दास्या अपि । प्रसूतौ तु तस्याः स्वामिकार्येऽपि मासमात्रम् । दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकम् । इत्यंगिरसोक्तेः । षडशीतावपि ॥ स्वामिशौचेन दासाद्याः स्पृश्या मासात्तु कर्मसु ॥ योग्याः स्युर्मासतो दासी सूती चेत्स्पृश्यतामियात् ॥ १ ॥ दासास्तु नारदोक्ताः ॥ गृहे जातस्तथा क्रीतो लब्धो दायादुपागतः ॥ अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥ १ ॥ मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः ॥ तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ २ ॥ भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ॥ विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृताः ॥ ३ ॥ वडवा दासी तल्लोभाद्दासो जात इत्यर्थः । दासादेः स्वामितत्सपिण्डमरणे तु विष्णुः ॥ पत्नीनां दासानामानुलोम्येन स्वामितुल्यमाशौचम् । मृते स्वामिन्यात्मीयम् इति ॥ प्रतिलोमदासादेर्नाशौचम् । वर्णानामानुलोम्येन प्रतिलोम इति याज्ञवल्क्योक्तेः । शास्त्रातिक्रमेण दास्यकरणेऽपि नाशौचम् । आनुलोम्ये नाशौचमिति विष्णूक्तेः ॥

आतां सेवकांचें आशौच सांगतो.

त्यांत स्वदासीच्या पुत्रास त्याचे सपिंड मेल्यास स्नान केल्यावर यजमानाचें काम करण्यास तो शुद्ध होतो. भक्तदासास[१] ३ दिवस; कारण, "गर्भदास तत्काल व भक्तदास ३ दिवसांनीं शुद्ध होतो," असें **मिताक्षरें**त अन्य **स्मृति**वचन आहे. "मजूरीनें काम करणारे व शूद्रजातीय दास दासी हे स्नान, शरीरसंस्कार व गृहकर्म यांविषयीं दूषित नाहींत," असें **शातातप**वचन आहे. येथेंच दत्तकादि १३ दासांस यजमा-

---

१ भक्तदास ह्मणजे—पिढीजादा चाकर नसून, रोजमुऱ्याच्या नोकरीस राहिलेला.

नाच्या आशौचाशीं तुल्य दिवसांनंतर, आपलें १ महिना आशौच असतांही स्वामिकार्याविषयीं स्पृश्यता आहे; कारण, "दास, शिष्य, पगार घेणारे व एकत्र वासकर्ते शिष्य, ते सूतक किंवा मृतक यजमानाबरोबर धरल्यानें शुद्ध होतात," अशी **बृहस्पति**स्मृति आहे. यावरून, स्वामिकार्याविषयीं शुद्धि असली तरी, स्वतःच्या व्रतादि कर्मांविषयीं आशौच आहे. असेंच दासीसही समजावें. ती प्रसूत झाल्यास स्वामिकार्यासहि १ मासपर्यंत अशुचि. कारण, "दास, दासी हे ज्या वर्णाचा जो असेल त्यास यजमानाचें आशौच असतें, परंतु दासीस सूतक १ मास," अशी **आंगिरसो**क्ति आहे. **षडशीतीं**तही—"यजमानाशौचानें दासादिक पूर्वोक्त कर्मांस स्पर्शार्ह होतात. परंतु दासी प्रसूत झाल्यास १ मासानें शुद्ध होते" असें सांगितलें आहे. दासांचीं लक्षणें **नारदांनीं** सांगितलीं आहेत. तीं,—"स्वगृहीं झालेला, विकत घेतलेला, आकस्मिक मिळालेला, हिशानें आलेला, संकटीं पाळलेला, यजमानानें स्वाधीन ठेवलेला, ऋणमुक्त केलेला, युद्धीं व द्यूतीं जिंकलेला, शरणागत, देशांतरीं जाण्यास निघाला असतां ठेवून घेतलेला, भक्तदास व स्वदासीच्या लोभानें झालेला दास, स्वविक्रय करणारा असे १५ प्रकारचे दास सांगितले आहेत." पूर्वोक्त दासांस त्यांचा यजमान व तत्सपिंड मेल्यास, **विष्णु** ह्मणतो—"दास व त्यांच्या स्त्रियांस यजमानतुल्य आशौच. यजमान मेल्यास स्ववर्णविहित आशौच आहे." प्रतिलोम-दासांस (यजमानाहून समवर्णाच्या दासांस) आशौच नाहीं, कारण, "वर्णानुलोम्यानें आशौच आहे. प्रतिलोमांस नाहीं. अर्थात् यजमानाहून न्यूनवर्ण दासास आहे, उत्तमांस नाहीं," अशी **याज्ञवल्क्यो**क्ति आहे. शास्त्रातिक्रम करून दास्य केलें तरी आशौच नाहीं; कारण—"आनुलोम्यास आशौच नाहीं," अशी **विष्णू**क्ति आहे.

**सर्वाशौचं रजोदर्शनं च रात्रौ जातं चेत्तदा रात्रिं त्रिभागां कृत्वाद्ये भागद्वये पूर्वदिनम् । अंत्ये तूत्तरम् । यद्वा प्रागर्द्धरात्रात्प्राग्वा सूर्योदयात्पूर्वदिनम् । अनंतरं तूत्तरमिति पक्षत्रयं मिताक्षराद्यैरुक्तम् । अत्र देशाचारतो व्यवस्था ॥**

आतां आशौच कसें धरावें तें सांगतो.

सर्वेही आशौच व रजोदर्शन रात्रीं झालें असेल तर रात्रीचे ३ विभाग करून, प्रथम २ भागांत झाल्यास पूर्व दिवस, व ३ ऱ्यांत उत्तर दिवस प्रथम धरावा. किंवा २ भाग करून अर्धरात्रपर्यंत प्रथम, नंतर उत्तर दिवस धरावा. किंवा सूर्योदयापासून पूर्व, नंतर द्वितीय असे ३ पक्ष आहेत. यांची देशाचारानें व्यवस्था जाणावी.

## ॥ अथातिक्रांताशौचम् ॥

**तत्राशौचमध्ये ज्ञाते तच्छेषमात्रम् । नाधिकं प्रोषिते कालशेषः स्यात् [ या० स्मृ. अ. ३ श्लो. २१ ] इति याज्ञवल्क्योक्तेः । प्रसवे अतिक्रांताशौचं नास्त्येव । नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि ॥ इति देवलोक्तेः । तत्रापि पितुः स्नानं भवत्येव । अशौचोत्तरं ज्ञाते तु वृद्धवसिष्ठः ॥ मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा ॥**

**अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुद्ध्यति ॥ १ ॥ इदं पूर्णजात्याशौचविषये एव । न तु वयोवस्थानिमित्ते । अतिक्रांते दशाहे तु इति मनूक्तेः । यत्तु माधवीये देवलः ॥ आत्रिपक्षात्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः ॥ परमेकाहमावर्षादूर्ध्वं स्नातो विशुद्ध्यति ॥ १ ॥ इति तदनापदि ज्ञेयम् । इदं चैकदेशे । देशांतरे तु स्नानमात्रम् । देशांतरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ॥ सद्यः स्नानेन शुद्ध्यंति गर्भस्रावे च गोत्रिणः ॥ १ ॥ इति पराशरोक्तेरिति विज्ञानेश्वरः । माधवीये विष्णुस्तु ॥ अर्वाक् त्रिपक्षात्रिनिशं षण्मासाच्च दिवानिशम् ॥ अहःसंवत्सरादर्वाग्देशांतरमृतेष्वपीत्याह । अत्रापदनापद्भ्यां व्यवस्था । देशांतरं त्वाह बृहस्पतिः ॥ महानद्यंतरं यत्र गिरिर्वा व्यवधायकः ॥ वाचो यत्र विभिद्यंते तद्देशांतरमुच्यते ॥ १ ॥ इति । वाचो देशभाषाः तद्भेद उभयशेष इतिं द्वावेव पक्षौ । वाशब्दस्यैकत्वात् । मातापित्रोस्तु सर्वत्र पूर्णमेवाशौचम् । पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ॥ श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेदिति पारस्करोक्तेः । स्त्रीपुंसयोः परस्परं सपत्न्योश्चैवमिति । स्मृत्यर्थसारे सापत्नमातुस्तु त्रिरात्रं । व्याघ्रः ॥ तुल्यं वयसि सर्वेषामतिक्रांते तथैव च । इति ॥**

आतां अतिक्रांताशौच सांगतो.

त्याचे सर्व दिवस होण्यापूर्वी तें समजल्यास बाकी राहिलेलें धरावें. कारण,—"देशांतरीय मृताशौच आपल्यास जेवढे दिवस धरणें असेल, त्यांत समजल्यास शेष धरावें," अशी **याज्ञवल्क्यो**क्ति आहे. जननाशौच अतिक्रांत धरूं नये; कारण,—"प्रसवाशौच त्याचे दिवस झाल्यावर धरूं नये," अशी **देवलो**क्ति आहे. पित्यास मात्र देशांतरीं व कालांतरीं अपत्यजन्मश्रवणनिमित्तक स्नान अवश्य आहे. मृतकाशौच त्याचे दिवस झाल्यावर समजल्यास **वृद्धवसिष्ठ** ह्मणतो—"३ मासपर्यंत त्रिरात्र, ६ मासपर्यंत पक्षिणी, ९ मासपर्यंत १ दिवस, नंतर स्नानानें शुद्ध." हें वचन पूर्ण जात्याशौचाविषयींच आहे. वयोवस्थानिमित्तविषयकास नाहीं; कारण,—"दशाह अतिक्रांत झाल्यावर धरूं नये," अशी **मनू**क्ति आहे. जें **माधवीयां**त **देवल**वचन आहे कीं,—"दीडमासपर्यंत त्रिरात्र, ६ पर्यंत पक्षिणी, १ वर्षपर्यंत १ दिवस, नंतर स्नानानें शुद्धि," तें आपत्काल नसतां ग्राह्य आहे. हें सर्व एक देशांत. देशांतरांत स्नानमात्र; कारण,—"देशांतरीं मृताचें, व नपुंसक, वैखानस, संन्यासी यांचें व गर्भस्रावाचें अशौच नाहीं. गोत्रज स्नानानें शुद्ध होतात, अशी **पराशरो**क्ति आहे," असें **विज्ञानेश्वर** ह्मणतो. **माधवीयां**त **विष्णु** ह्मणतो—"दीडमासापूर्वी त्रिरात्र, ६ मासांपूर्वी पक्षिणी व एक वर्षापूर्वी १ दिवस, देशांतर असलें तरी धरावें." येथें आपत्ति व अनापत्ति पाहून व्यवस्था ठेवावी. देशांतरलक्षण **बृहस्पति** सांगतो—"महानदीचें किंवा पर्वताचें व्यवधान, व भाषाभेद असेल त्यास देशांतर ह्मणावें." भाषांचा भेद किंवा उभयशेष हे दोनच पक्ष आहेत. मातापितरांचें सर्वत्र पूर्णाशौच आहे; कारण,—"ते देशांतरीं मेले तथापि पुत्रानें श्रवण केल्यापासून १० दिवस

आशौच धरावें;" असी **पारस्करो**क्ति आहे. "स्त्रीपुरुषांस व सवतींस एकमेकांचें असेंच," असें **स्मृत्यर्थसारां**त सांगितलें आहे. सावत्र मातेचें त्रिरात्र.

## ॥ आशौचसंपाते निर्णयः ॥

तत्र पूर्णाशौचस्य द्वितीयाद्यहःसु यदि सजातीयं शावे जननं वा समं न्यूनं वा स्यात्तदा पक्षषट्के पूर्वशेषेण शुद्धिः। अंतरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति । इति याज्ञवल्क्योक्तेः। इदं पूर्णाशौचे। त्र्यहाद्यल्पाशौचसंपाते तूत्तरमेवेति गौडः॥ हरदत्तोऽप्येवम्। अन्ये तु तत्रापि पूर्वेण शुद्धिमाहुः। यदा तु जनने शावं समन्यूनमधिकं वा तदा परमेव कार्यं। न पूर्वशेषाच्छुद्धिः। अस्पृश्यत्वाधिक्यात्। शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनीति षड्त्रिंशन्मतात्॥ मरणोत्पत्तियोगे तु गरीयो मरणं भवेदिति कौर्माच्च। षडशीतौ तु॥ स्वभावबहुसूतिस्तु न्यूनशावविशोधिनीति शावस्यापि सूत्या निवृत्तिरुक्ता। त्र्यहादिशावमध्ये सजातीयं विजातीयं वा दीर्घकालमुत्तरं चेत्तदा न पूर्वेण शुद्धिरित्यपरार्कः। शुद्धिविवेके तु शावेन शुद्ध्यते सूतिरित्यविशेषात्तत्रापि पूर्वेण शुद्धिरुक्ता। तन्न। उत्तरस्य कालाधिक्येन बलवत्वात्। यथा त्रिरात्रेऽपक्रांते दशाहं प्रविशेद्यदि॥ आशौचं पुनरागच्छेत्तत्समाप्य विशुद्ध्यति॥ १॥ इति यमोक्तेरिति माधवहरदत्तमिताक्षरादयः। इदं शावेन शुद्ध्यते सूतिरित्यस्य बाधकम्। अन्यथा वचनवैयर्थ्यात्। तेन सूत्या शावाशौचे त्रिरात्रशुद्धावपि शावनिमित्तमस्पृश्यत्वं भवत्येव। गरीयो मरणं भवेदिति कौर्मात्। पूर्वशेषशुद्धेरपवादमाह शातातपः॥ रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्॥ इति। अत्र रात्रिशब्दोऽहोरात्रपरः। अहःशेषे द्वाभ्यां प्रभाते तिसृभिः इति शङ्खलिखितोक्तेः। अथ यदि दशरात्रसन्निपाते पुराद्यं दशरात्रमाशौचमानवमाद्दिवसादत ऊर्ध्वं द्विरात्रेण व्युष्टायां त्रिरात्रेणेति बौधायनोक्तेश्चेति पराशरमाधवहारलताशुद्धितत्त्वादयः। गौडा अप्येवम्। रात्रिमात्रावशिष्टे इति तु विज्ञानेश्वरादयः। अत्र देशाचारतो व्यवस्था। विशेषो निर्णयसिंधौ ज्ञेयः। रात्रिशेषे त्रिरात्रादिसंपाते तु पूर्वशेषेणैव शुद्धिः पूर्वाशौचांतर्वर्द्धितद्वित्रिदिनमध्येऽधिकाशौचांतरपाते तु वर्धितस्याल्पत्वादधिकेनैव शुद्धिः। न च वर्द्धितस्य पूर्वशेषत्वं। रात्रिशेषे पूर्वशेषशुद्ध्यपवादे नैमित्तिकावृत्तिन्यायोज्जीवनात्। अपवादाभावे उत्सर्गप्राप्तेः। अपवादांतरमाह शङ्खः॥ मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता॥ पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणी॥ १॥ पित्राशौचमध्ये मातृमृतौ पक्षिणीमधिकां कुर्यादिति तुर्यपादार्थः। इदं दशमदिनात्पूर्वं मातृमरणे। दशम्यां रात्रौ तत्प्रभाते वा मातृमरणे द्व्यहत्र्यहयोः पक्षिण्या समुच्चय इत्येके। तन्न। संख्यांतरापत्त्या त्र्यहादिश्रुतिबाधापत्तेः। अतएवैका देया षड् देया इत्यादिश्रुतसंख्याबाधापत्तेः समुच्चयो निरस्तो द्वादशाध्याये। मातुरन्वारोहणे तु न पक्षिणी। यदा नारी विशेदग्निं प्रियस्य प्रियवांछया॥ तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हीति पृथ्वीचंद्रोदये लघुहारीतोक्तेः।

मातापित्रोर्भर्तुश्चान्यसपिंडाशौचेन निवृत्तिर्नास्त्येव । श्रुत्वा 'तद्दिनमारभ्य दशाहं सूतकी भवेदिति' स्मृतेः ॥ भर्त्राशौचोत्तरमन्वारोहणे त्रिरात्रं । त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शाश्वत इत्यपरार्के ब्राह्मोक्तेः । सहगमने तु संपूर्णं । युद्धहतस्य सद्यः- शौचेऽन्वारोहणे ब्राह्मोक्तेस्त्रिरात्रत्वात् । भर्तुरपि त्र्यहेण पिंडदानम् । एकचितौ तु सद्यः शौचम् । षडशीतौ ॥ पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा ॥ सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ॥ १ ॥ तथा शावादिमध्ये पुत्रोत्पत्तौ जातकर्मादिकार्यमेव । मातुः पक्षिणीमध्ये पितुरेकादशाहवृषोत्सर्गादि कार्य- मेवेति देवयाज्ञिकाः ॥

आतां अशौचसंपाताचा निर्णय सांगतो.

त्यांत पूर्णाशौचाच्या दुसऱ्या दिवसापासून पुढें सजातीय सूतक किंवा मृतकसम अथवा न्यून आलें असेल तर, ३ मासपर्यंत पूर्वाशौचांतीं शुद्धि होते; कारण,—"मृत- कांत जननाशौच किंवा सूतक व अन्य मृतक आल्यास पूर्वशेषानें शुद्धि होते," असें **याज्ञवल्क्य**वचन आहे; परंतु, हें पूर्णाशौचाचा संपात ( एकांत दुसरें येणें ) झाल्यास. "त्र्यहादि अल्पाशौचसंपातांत तर,—उत्तराशौचानें शुद्धि," असें **गौड** ह्मणतात. **हरदत्त**ही असेंच ह्मणतो. **अन्य** तर, पूर्वाशौचानें शुद्धि सांगतात. ज्या वेळीं जननाशौचांत सम न्यून किंवा अधिक मृतकाशौच येईल तेव्हां तें पूर्ण धरावें. पूर्वशेषानें शुद्धि होत नाहीं; कारण, मृतकांत अस्पृश्यत्व अधिक आहे. "मृतकानें सूतक निवृत्त होतें; पण सूतकानें मृतक निवृत्त होत नाहीं," असें **षट्त्रिंशन्मत** आहे. "मरण व जनन यांचा योग झाल्यास पहिलें विशेष आहे," असें **कूर्मपुराण**- वचन आहे. **षडशीतींत** तर—"विशेषसूतकानें न्यून मृतकाची निवृत्ति होते," अशी मृतकाची सूतकानें निवृत्ति सांगितली आहे. "३ दिवस वगैरे मृतकांत सजातीय अथवा विजातीय अधिक द्वितीय आशौच असेल तर, पहिल्यानें शुद्धि होत नाहीं," असें **अपरार्क** ह्मणतो. **शुद्धिविवे**कांत तर "मृतकानें सूतक निवृत्त होतें, असा अविशेष आहे ह्मणून, पूर्वोक्त विषयांत पहिल्यानें शुद्धि होते," असें सांगितलें आहे. तें अप्रमाण होय; कारण,—पुढल्याचा काल अधिक असल्यावरून, त्यास सबलत्व आहे. जसें—"प्रथम आलेलें त्रिरात्र आशौच चालू असून, त्यांत जर, दशरात्र येईल तर दशरात्राची समाप्ति होतांच शुद्ध होतो असें **यमा**चें वचन आहे." ह्मणून **माधवहरदत्तमिताक्षरा**दिक हेंच योग्य ह्मणतात. हें वचन—"मृत- कानें सूतकनिवृत्ति होते" या **षट्त्रिंशन्मत**स्थ वाक्याचें बाधक आहे असें जाणावें. नाहीं तर वचनव्यर्थता होईल. यावरून सूतकांत मृतक त्रिरात्र धरल्यानें शुद्धि होते, तथापि तन्निमित्तक अस्पृश्यत्व असतेंच. कारण,—"मरणनिमित्तक आशौच सूतका- हून श्रेष्ठ आहे," असें **कूर्मपुराण**वचन आहे. पूर्वाशौचशेषानें शुद्धीविषयीं अपवाद **शातातप** सांगतो—"अहोरात्र शेष असेल तर २ दिवसांनीं, व १ प्रहर शेष असेल तर ३ दिवसांनीं शुद्धि होते." येथें जो रात्रिशब्द आहे तो अहोरात्रपर आहे. "१ दिवस

शेष असल्यास २ दिवसांनीं, सकाळीं १ प्रहर शेष असल्यास ३ दिवसांनीं शुद्धि होते," अशी **शंखलिखितो**क्ति आहे. व "जर दशरात्राचा सन्निपात न होतां पहिलें दशरात्र ९ दिवस झालें, नंतर २ रात्रि गेल्यानें शुद्ध होतो; परंतु दुसऱ्या रात्रीच्या प्रातःकाळीं तिसरें आलें तर, त्रिरात्रानें शुद्धि होते," असें **बौधायन**-वचन आहे. ह्मणून **पराशर, माधव, हारलता** व **शुद्धितत्त्वा**दिक ह्मणतात. **गौड**ही असेंच ह्मणतात. "१ रात्र मात्र शिल्लक असल्यास पूर्वोक्त व्यवस्था योग्य आहे," असें तर **विज्ञानेश्वरा**दिक ह्मणतात. येथें देशाचारतः व्यवस्था. यांतला विशेष **निर्णयसिंधूं**त जाणावा. १ रात्र शेष राहून त्यांत अन्य त्रिरात्रादिकांचा जर संपात झाला तर, पूर्वशेषानेंच शुद्धि. पूर्वाशौचांत वाढिवलेल्या २ किंवा ३ दिवसांत अधिक दुसरें आल्यास, वाढिवल्याचें अल्पत्व असून, त्याचें आधिक्य आहे ह्मणून द्वितीयांतीं शुद्धि होते. यावरून, वर्धिताचें पूर्वशेषत्व १ रात्रशेषांत पूर्वशेष शुद्धीचा अपवाद असतां नैमित्तिक आवृत्ति होत नाहीं; कारण, तसें करणें न्यायविरुद्ध आहे. अपवादांचा अभाव असल्यास उत्सर्गतः प्राप्ति होईल. याविषयीं दुसरा अपवाद **शंख** सांगतो—"माता प्रथम मेली असून तिच्या आशौचांत जर बाप मरेल तर, पितृशेषानें शुद्ध होतो, व मातेचें पक्षिणी धरावें." यावरून, पित्राशौचांत जर माता मेली तर १ पक्षिणी अधिक धरावें, असा या वाक्याच्या चतुर्थ चरणाचा अभिप्राय आहे. हें १० दिवसांपूर्वीं माता मेली तर. "दहाव्या रात्रीं व ११ वे दिवशीं प्रातःकाळीं माता मेल्यास २ व ३ दिवसांचा पक्षिणीशीं समुच्चय करावा," असें **कित्येक** ह्मणतात, तें योग्य नाहीं. कारण, आशौचदिनसंख्या आली तर त्र्यहादिक श्रुतींचा बाध होईल ह्मणून, " १ द्यावी, ६ द्याव्या," इत्यादि वर्णित संख्यांचा बाध येईल ह्मणून **मीमांसे**च्या १२ व्या अध्यायांत **जैमिनीनें** समुच्चयाचा निरास केला आहे. माता अन्वारोहण करील तर पक्षिणी नाहीं; कारण, "जर पतीचें प्रिय करण्याच्या हेतूनें स्त्री अग्निप्रवेश करील तर, तिचें आशौच पतीप्रमाणें धरावें," अशी **पृथ्वीचंद्रोदयां**त **लघुहारीतो**क्ति आहे. माता पिता व पति यांचें आशौच अन्यसपिंडाशौचानें निवृत्त होत नाहीं, कारण, "पूर्वोक्त तिघांचें मरण श्रवण झाल्या-दिवसापासून, १० दिवस अशुचि रहावें," अशी **स्मृति** आहे, व "पतीच्या आशौचानंतर, स्त्रीनें अन्वारोहण केल्यास त्रिरात्र, व त्रिदिन असेल तर तें निवृत्त झाल्यावर श्राद्ध प्राप्त होतें," अशी **अपरार्कां**त **ब्रह्मपुराणो**क्ति आहे. जर तिनें सहगमन केलें असेल तर, आशौच संपूर्ण धरावें; कारण "युद्धहताचें तत्काल शौच, व अन्वारोहणीं त्रिरात्र" **ब्राह्म**वचनानें प्राप्त होतें. पतीचें पिंडदानही ३ दिवसांनीं. एक चिति असेल तर तत्काल शुद्धि. **षडशीतीं**त—"सूतकांत व मृतकांत जी पूर्वाशौचानें शुद्धि होते ती बाळंतीण व अग्निदानादिक क्रिया करणारा, व मृताचे पुत्र यांवांचून होते. तसेंच मृतकांत पुत्र झाल्यास तत्संबंधि जातकर्मा-दिक आशौचांतच करावें." "मातेच्या पक्षिणींत पित्याचें एकादशाहिक वृषोत्सर्गादिक करावें," असें **देवयाज्ञिक** ह्मणतो.

## ॥ अथाशौचापवादः ॥

शुद्धितत्त्वे कौर्मे ॥ सद्यः शौचं समाख्यातं दुर्भिक्षे वाप्युपद्रवे ॥ डिंबाहवहतानां च विद्युता पार्थिवैर्द्विजैः ॥ १ ॥ उपद्रवेत्यन्तमारके । पराशरोऽपि ॥ उपसर्गमृते चैव सद्यःशौचं विधीयते ॥ उपसर्गोत्यंतमारक इति शूलपाणिहारलतादयः । तथा मुमूर्षोर्दानादौ नाशौचम् । आपद्यपि च क्लिष्टानां सद्यःशौचं विधीयते ॥ इति याज्ञवल्क्योक्तेः । शुद्धिरत्नाकरे दक्षोऽपि ॥ स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम् ॥ आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ॥ १८ ॥ [ द० स्मृ० अ० ६ ] प्रचेताः ॥ कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ॥ राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तितः ॥ १ ॥ कारवः सूपकारा वा शिल्पिनश्चैलधावकाः ॥ लघुविष्णुः ॥ व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ॥ आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ १ ॥ प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः ॥ नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ २ ॥ यत्तु विष्णुः ॥ न व्रतिनां व्रते इति तदप्यारब्धपरम् । त्रिंशच्छ्लोक्याम् ॥ २ ॥ न प्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥ अपिशब्देन भारतहरिवंशादिश्रवणेऽपि नाशौचम् । गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ॥ इति ब्राह्मोक्तेः । चन्द्रिकायां जाबालिः । संध्या पंचमहायज्ञा नैत्यकं स्मृतिकर्म च ॥ तन्मध्ये हापयेत्तेषां दशाहांते पुनः क्रिया ॥ १ ॥ ग्रहणे त्वाशौचमध्येऽपि श्राद्धदानादि कार्यमेव । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते इति लैङ्गोक्तेः ॥

आतां आशौचापवाद सांगतो.

याविषयीं **शुद्धितत्त्वां**त **कूर्मपुराणां**त—"दुष्काळ किंवा मोठा उपद्रव ( महामारी वगैरे ) देशभर झाल्यास व युद्धांत मेल्यास व विद्युल्लतेनें व राजानें अथवा ब्राह्मणानें मारल्यास तत्काल शुद्धि होते," असें सांगितलें आहे. **पराशर**ही ह्मणतो कीं,—"उपसर्गानें मेल्यास तत्काल शुद्धि विहित आहे." "येथें उपसर्गशब्दानें महामारी समजावी," असें **शूलपाणिहारलता**दिक ह्मणतात. तसेंच मरणोन्मुखास प्रायश्चित्तदानादि करण्यास आशौच नाहीं; कारण,—"संकटांत व रोगानें पीडित झालेल्यांस तत्काल शुद्धि," अशी **याज्ञवल्क्यो**क्ति आहे. **शुद्धिरत्नाकरां**त **दक्ष**ही ह्मणतो कीं,—"हें पूर्वोक्त सर्व आशौच स्वस्थकालीं ( संकट नसतां ) धरावें. आपत्तींत आशौच असतांहि तें नाहीं, असें धर्मज्ञांनीं सांगितलें आहे." **प्रचेता** ह्मणतो—"स्वयंपाकी, परीट, वैद्य, दासी, दास, राजे, तत्सेवक यांस आशौच असतांहि स्पर्शदोष नाहीं." **लघुविष्णु** ह्मणतो—"व्रत, यज्ञ, विवाह, श्राद्ध, होम, पूजा, जप, यांचा आरंभ झाल्यावर समाप्तीपर्यंत आशौचदोष नाहीं, समाप्तीनंतर आहे." आरंभशब्दाची व्याख्या पुढें लिहिल्याप्रमाणें—"यज्ञांत आचार्यवरण, व्रतांत व सत्रांत संकल्प, विवाहादिकांत नांदीश्राद्ध व पार्वणश्राद्धांत स्वयंपाक झाला ह्मणजे त्या कर्मास आरंभ

झाला असें जाणावें." जें **विष्णूनें** ह्मटलें आहे कीं,—"व्रतकर्त्यांस व्रतांत आशौच नाहीं," तेंही आरंभानंतर असें जाणावें. **त्रिंशच्छ्लोकींत**—"दान, [1]उपनयन, यज्ञ, श्राद्ध, युद्ध, देवप्रतिष्ठा, चौल, तीर्थयात्रा, जप व विवाह इत्यादिकांत आरंभानंतर आशौच नाहीं," असें सांगितलें आहे. या वाक्यांत अपिशब्द आहे ह्मणून, नियमानें **भारत** व हरिवंशश्रवणास आरंभ केल्यावरही आशौच नाहीं असें सिद्ध होतें; कारण,—"ज्यानें नियम स्वीकारला आहे त्यास इतर कोणाचेंही आशौच धरावें लागत नाहीं," असें **ब्राह्मपुराण**वचन आहे. **चंद्रिकें**त **जाबालि** ह्मणतो—"संध्यापंचमहायज्ञादि नित्यकर्मे आशौचांत बंद करून, तें सरल्यावर पुनः सुरू करावीं. ग्रहणनिमित्तक आशौचांतही श्राद्धादि करावेंच;" कारण—"तोंपर्यंत शुद्धि नाहीं, जोंपर्यंत शुद्ध बिंब दिसलें नाहीं, तें दिसल्यानंतर सर्व कर्मांस शुद्धि आहे." अशी **लिंगपुराणोक्ति** आहे.

## ॥ अथ मृतदोषे ॥

हेमाद्रौ षट्त्रिंशन्मतकौर्मयोः ॥ व्यापादयेद्य आत्मानं स्वयमग्न्युदकादिभिः ॥ विहितं तस्य नाशौचं नापि कार्योदकक्रिया ॥ १ ॥ भविष्ये ॥ स्वेच्छया मरणं विप्राः शृंगिदंष्ट्रिसरीसृपैः ॥ अंत्यांत्यजविषोद्बंधैरात्मना चैव ताडनैः ॥ २ ॥ पाखण्डमाश्रिताश्चैव महापातकिनस्तथा ॥ स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा ॥ ३ ॥ न तेषां स्नानसंस्कारो न श्राद्धं न सपिण्डनम् ॥ ब्राह्मे ॥ एतानि पतितानां तु यः करोति विमोहितः ॥ तप्तकृच्छ्रद्वयेनैव तस्य, शुद्धिर्न चान्यथा ॥ १ ॥ इदं कामतः । अज्ञाने त्वर्धम् । स्पर्शाश्रुणोर्ज्ञानतस्त्रिरात्रं । अज्ञाने एकोपवास इत्यादि निर्णयसिंधौ ज्ञेयम् ॥ इदं दर्पाद्बुद्धिपूर्वकृते ज्ञेयम् । अबुद्धिपूर्वं प्रमादहते तु सर्वं कार्यं ॥ अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः ॥ तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥ १ ॥ इत्यंगिरसोक्तेः । प्रमादमरणे त्रिरात्राशौचमिति शुद्धितत्त्वादयो गौडाः ॥ दशाहादिति दाक्षिणात्याः । अस्यापवादो हेमाद्रौ भविष्ये ॥ प्रमादादिच्छया वापि न कुर्यात्सर्पतो मृते ॥ नागपूजांविना नेत्यर्थः । तत्र प्रमादमृते दुर्मरणनिमित्तं दानाद्युक्तम् शातातपेन ॥ व्याघ्रेण निहते विप्रे विप्रकन्यां विवाहयेत् ॥ सर्पदष्टे नागबलिर्देयः सर्पश्च कांचनः ॥ १ ॥ इत्यादिना तन्निर्णयसिंधौ ज्ञेयम् ॥ सर्पदष्टेपि व्यासः ॥ सौवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ॥ व्यासाय दत्वा विधिवत्पितुरानृण्यमाप्तवान् ॥ १ ॥ हेमाद्रौ भविष्ये ॥ पंचम्यां पन्नगं हैमं स्वर्णैनैकेन कारयेत् ॥ क्षीराज्यपात्रमध्यस्थं पूज्यं विप्राय दापयेत् ॥ २ ॥ प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुना ॥ दर्पात्सर्पमृते नारायणबलिनास्य समुच्चयः । तथा वैद्यमरणेऽपि न दोषः ।

[1] येथें नियमित कांहीं कर्मे आरंभिल्यानंतर आशौच आलें तर तें धरूं नये अशा अभिप्रायाचीं बरींच वचनें दिलीं आहेत व तीं सर्व सयुक्तिक आहेत, असें असतां सांप्रत तसें आचरण करीत नाहींत याचें कारण काय? शास्त्राकडे पाहतो कोण!

